॥ श्रीविष्णुवल्लभ अथवा अष्टषष्टिनामतीर्थस्तोत्रं नरसिंहपुराणे ॥

भरद्वाज उवाच
त्वत्तो हि श्रोतुमिच्छामि गुह्यक्षेत्राणि वै हरेः ।
नामानि च सुगुह्यानि वद पापहराणि च ॥ १॥

सूत उवाच
मन्दरस्थं हरिं देवं ब्रह्मा पृच्छति केशवम् ।
भगवन्तं देवदेवं शङ्खचक्रगदाधरम् ॥ २॥

ब्रह्मोवाच
केषु केषु च क्षेत्रेषु द्रष्टव्योऽसि मया हरे ।
भक्तैरन्यैः सुरश्रेष्ठ मुक्तिकामैर्विशेषतः ॥ ३॥

यानि ते गुह्यनामानि क्षेत्राणि च जगत्पते ।
तान्यहं श्रोतुमिच्छामि त्वत्तः पद्मायतेक्षण ॥ ४॥

किं जपन् सुगतिं याति नरो नित्यमतन्द्रितः ।
त्वद्भक्तानां हितार्थाय तन्मे वद सुरेश्वर ॥ ५॥

श्रीभगवानुवाच
शृणुष्वावहितो ब्रह्मन् गुह्यनामानि मेऽधुना ।
क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि तत्त्वतः ॥ ६॥

कोकामुखे तु वाराहं मन्दरे मधुसूदनम् ।
अनन्तं कपिलद्वीपे प्रभासे रविनन्दनम् ॥ ७॥

माल्योदपाने वैकुण्ठं महेन्द्रे तु नृपात्मजम् ।
ऋषभे तु महाविष्णुं द्वारकायां तु भूपतिम् ॥ ८॥

पाण्डुसह्ये तु देवेशं वसुरूढे जगत्पतिम् ।
वल्लीवटे महायोगं चित्रकूटे नराधिपम् ॥ ९॥

निमिषे पीतवासं च गवां निष्क्रमणे हरिम् ।
शालग्रामे तपोवासमचिन्त्यं गन्धमादने ॥ १०॥

कुब्जागारे हृषीकेशं गन्धद्वारे पयोधरम् ।
गरुडध्वजं तु सकले गोविन्दं नाम सायके ॥ ११॥

वृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् ।
केदारे माधवं विन्द्याद्वाराणस्यां तु केशवम् ॥ १२॥

पुष्करे पुष्कराक्षं तु धृष्टद्युम्ने जयध्वजम् ।
तृणबिन्दुवने वीरमशोकं सिन्धुसागरे ॥ १३॥

कसेरटे महाबाहुममृतं तैजसे वने ।
विश्वासयूपे विश्वेशं नरसिंहं महावने ॥ १४॥

हलाङ्गरे रिपुहरं देवशालां त्रिविक्रमम् ।
पुरुषोत्तमं दशपुरे कुब्जके वामनं विदुः ॥ १५॥

विद्याधरं वितस्तायां वाराहे धरणीधरम् ।
देवदारुवने गुह्यं कावेर्यां नागशायिनम् ॥ १६॥

प्रयागे योगमूर्तिं च पयोष्ण्यां च सुदर्शनम् ।
कुमारतीर्थे कौमारं लोहिते हयशीर्षकम् ॥ १७॥

उज्जयिन्यां त्रिविक्रमं लिङ्गकूटे चतुर्भुजम् ।
हरिहरं तु भद्रायां दृष्ट्वा पापात् प्रमुच्यते ॥ १८॥

विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम् ।
लोकनाथमयोध्यायां कुण्डिने कुण्डिनेश्वरम् ॥ १९॥

भाण्डारे वासुदेवं तु चक्रतीर्थे सुदर्शनम् ।
आढ्ये विष्णुपदं विद्याच्छूकरे शूकरं विदुः ॥ २०॥

ब्रह्मेशं मानसे तीर्थे दण्डके श्यामलं विदुः ।
त्रिकूटे नागमोक्षं च मेरुपृष्ठे च भास्करम् ॥ २१॥

विरजं पुष्पभद्रायां बालं केरलके विदुः ।
यशस्करं विपाशायां माहिष्मत्यां हुताशनम् ॥ २२॥

क्षीराब्धौ पद्मनाभं तु विमले तु सनातनम् ।
शिवनद्यां शिवकरं गयायां च गदाधरम् ॥ २३॥

सर्वत्र परमात्मानं यः पश्यति स मुच्यते ।

अष्टषष्टिश्च नामानि कथितानि मया तव ॥ २४॥

क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः ।
एतानि मम नामानि रहस्यानि प्रजापते ॥ २५॥

यः पठेत् प्रातरुत्थाय शृणुयाद्वापि नित्यशः ।
गवां शतसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ २६॥

दिने दिने शुचिर्भूत्वा नामान्येतानि यः पठेत् ।
दुःस्वप्नं न भवेत् तस्य मत्प्रसादान्न संशयः ॥ २७॥

अष्टषष्टिस्तु नामानि त्रिकालं यः पठेन्नरः ।
विमुक्तः सर्वपापेभ्यो मम लोके स मोदते ॥ २८॥

द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः ।
वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम् ॥ २९॥

सूत उवाच
हरिं समभ्यर्च्य तदग्रसंस्थितो हरिं स्मरन् विष्णुदिने विशेषतः ।
इमं स्तवं यः पठते स मानवः प्राप्नोति विष्णोरमृतात्मकं पदम् ॥ ३०॥

इति श्रीनरसिंहपुराणे आद्ये धर्मार्थमोक्षदयिनि विष्णुवल्लभे
पञ्चषष्टितमोऽध्यायः ॥ ६५॥